वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ ।
निर्विघ्नं कुरु मे देव शुभकार्येषु सर्वदा ॥१॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणी ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥२॥

वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥३॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥४॥

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारं च प्रणतोस्मि मुनित्रयम् ।।५॥

रामो राजमणिस्सदा विजयते रामम् रमेशं भजे
रामेणाभिहता निशाचर-चमू रामाय तस्मै नमः ।
रामान्नास्ति परायणम् परतरम् रामस्य दासोस्म्यहम्
रामे चित्त-लयस्स्दा भवतु मे भो राम मामुद्धर ॥६॥